8




# प्रत्ययाः

**1. अधोलिखितानि वाक्यानि पठत—**

(i) बालकः पठितुं विद्यालयं गच्छति।

(ii) पठित्वा गुरुं प्रणम्य सः गृहमागच्छति।

(iii) ततः सः तर्तुम् तरणतालं गच्छति।

(iv) तस्य मित्रं व्यायामं कर्तुं व्यायामशालां गच्छति।

(v) ततः आगत्य तौ पाठान् स्मरतः।

उपरिलिखितानि रेखाङ्कितपदानि प्रत्यययुक्तानि सन्ति। भवन्तः नवकक्षायां एतान् प्रत्ययान् पठितवन्तः, अधुना तेषां पुनरभ्यासं कृत्वा एतानि अतिरिच्य कतिपयान् प्रत्ययान् पठिष्यामः।

| |
|---|
| (क) शब्दस्य धातोः वा अन्ते ये शब्दांशाः प्रयुज्यन्ते ते प्रत्ययाः भवन्ति। |
| (ख) प्रत्ययानां योगेन शब्दस्य अर्थः परिवर्तते। |
| (ग) प्रत्ययाः त्रिविधाः भवन्ति। |




| |
|---|
| ध्यातव्यम् तथ्यम्— |
| (क) क्त्वा-तुमुन्-प्रत्यययुक्तानि पदानि अव्ययानि भवन्ति। |
| (ख) धातुना विशेषणं निर्मातुं, "कर्तुं योग्यम्" इत्यर्थे तव्यत्, अनीयर्, यत् प्रत्ययाः युज्यन्ते। |
| (ग) धातुना (क्रियया) विशेषणं निर्मातुं शतृशानचौ प्रत्ययौ प्रयुज्येते। |
| (घ) भूतकालिकक्रियाणां प्रयोगाय क्त-क्तवतू प्रत्ययौ प्रयुज्येते। |
| (ङ) अनेन गुणेन युक्त इत्यर्थे मतुप्/वतुप्, ठक्, णिनि च प्रत्ययाः प्रयुज्यन्ते। |
| (च) भाववाचकसंज्ञां विज्ञापयितुं त्व, तल् च प्रत्ययौ प्रयुज्येते। |

## शतृ-प्रत्यय:

**2. अधोलिखितानि वाक्यानि ध्यानेन पठन्तु —**

(i) ध्यायत: विषयान् पुंस: तेषु सङ्ग: उपजायते।

(ii) गच्छन्त: यात्रिण: जल्पन्ति।

(iii) खादन् नर: न वदति।

(iv) चिन्तयन् लव: लिखति।

(v) गायन्ती बालिका प्रशंसां प्राप्नोति।

(vi) पतत् फलं त्रुट्यति (विभक्तं भवति)

उपरिलिखितेषु वाक्येषु रेखाङ्कितपदानि शतृ-प्रत्यययुक्तानि सन्ति। शतृप्रत्यययुक्तानि पदानि विशेषणानि भवन्ति। एतेषां रूपम् एवं भवति —

| | | | |
|---|---|---|---|
| पठ् | + शतृ | - | पठत् |
| लिख् | + शतृ | - | लिखत् |
| धाव् | + शतृ | - | धावत् |
| गम् | + शतृ | - | गच्छत् |
| भू | + शतृ | - | भवत् |
| नी | + शतृ | - | नयत् |
| क्रीड् | + शतृ | - | क्रीडत् |
| ब्रू | + शतृ | - | वदत् |
| श्रु | + शतृ | - | शृण्वत् |
| कृ | + शतृ | - | कुर्वत् |
| पा/पिब् | + शतृ | - | पिबत् |

**एतेषां पदानां प्रयोगं पश्याम: — (पुल्लिङ्गे)**

| विभक्ति: | एकवचनम् | | द्विवचनम् | | बहुवचनम् | |
|---|---|---|---|---|---|---|
| प्रथमा | पठन् | बालक: | पठन्तौ | बालकौ | पठन्त: | बालका: |
| द्वितीया | पठन्तं | बालकम् | पठन्तौ | बालकौ | पठत: | बालकान् |
| तृतीया | पठता | बालकेन | पठद्भ्यां | बालकाभ्याम् | पठद्भि: | बालकै: |
| चतुर्थी | पठते | बालकाय | पठद्भ्यां | बालकाभ्याम् | पठद्भ्य: | बालकेभ्य: |
| पञ्चमी | पठत: | बालकात् | पठद्भ्यां | बालकाभ्याम् | पठद्भ्य: | बालकेभ्य: |
| षष्ठी | पठत: | बालकस्य | पठतो: | बालकयो: | पठतां | बालकानाम् |
| सप्तमी | पठति | बालके | पठतो: | बालकयो: | पठत्सु | बालकेषु |
| सम्बोधनम् | हे पठन् | बालक! | हे पठन्तौ | बालकौ! | हे पठन्त: | बालका:! |





(स्त्रीलिङ्गे)

| विभक्ति: | एकवचन | | द्विवचन | | बहुवचन | |
|---|---|---|---|---|---|---|
| प्रथमा | पठन्ती | बालिका | पठन्त्यौ | बालिके | पठन्त्य: | बालिका: |
| द्वितीया | पठन्तीं | बालिकाम् | पठन्त्यौ | बालिके | पठन्ती: | बालिका: |
| तृतीया | पठन्त्या | बालिकया | पठन्तीभ्यां | बालिकाभ्याम् | पठन्तीभि: | बालिकाभि: |
| चतुर्थी | पठन्त्यै | बालिकायै | पठन्तीभ्यां | बालिकाभ्याम् | पठन्तीभ्य: | बालिकभ्य: |
| पञ्चमी | पठन्त्या: | बालिकाया: | पठन्तीभ्यां | बालिकाभ्याम् | पठन्तीभ्य: | बालिकभ्य: |
| षष्ठी | पठन्त्या: | बालिकाया: | पठन्त्यो: | बालिकयो: | पठन्तीनाम् | बालिकानाम् |
| सप्तमी | पठन्त्याम् | बालिकायाम् | पठन्त्यो: | बालिकयो: | पठन्तीषु | बालिकासु |
| सम्बोधनम् | हे पठन्ति | बालिके! | हे पठन्त्यौ | बालिके! | हे पठन्त्य: | बालिका:! |

(नपुंसकलिङ्गे)

| विभक्ति: | एकवचनम् | | द्विवचनम् | | बहुवचनम् | |
|---|---|---|---|---|---|---|
| प्रथमा | पतत् | फलम् | पतती | फले | पतन्ति | फलानि |
| द्वितीया | पतत् | फलम् | पतती | फले | पतन्ति | फलानि |
| तृतीया | पतता | फलेन | पतद्भ्याम् | फलाभ्याम् | पतद्भि: | फलै: |
| चतुर्थी | पतते | फलाय | पतद्भ्याम् | फलाभ्याम् | पतद्भ्य: | फलेभ्य: |
| पञ्चमी | पतत: | फलात् | पतद्भ्याम् | फलाभ्याम् | पतद्भ्य: | फलेभ्य: |
| षष्ठी | पतत: | फलस्य | पततो: | फलयो: | पतताम् | फलानाम् |
| सप्तमी | पतति | फले | पततो: | फलयो: | पतत्सु | फलेषु |
| सम्बोधनम् | हे पतत् | फल! | हे पतती | फले! | हे पतन्ति | फलानि! |

**शानच् प्रत्यय:**

**3. शानच्-प्रत्यययुक्तपदानि अपि विशेषणानि भवन्ति।**

परस्मैपदी-धातुभि: सह शतृप्रत्यय: प्रयुज्यते। आत्मनेपदीधातुभि: सह शानच् प्रत्यय: अपि प्रयुज्यते—

सेव् + शानच् - सेवमान:
मुद् + शानच् - मोदमान:
रुच् + शानच् - रोचमान:
वृध् + शानच् - वर्धमान:
सह् + शानच् - सहमान:
लभ् + शानच् - लभमान:

एतेषां प्रयोगान् अध: पश्याम:—

सेवमान: बालक: सेवमानौ बालकौ सेवमाना: बालका:

एतस्य रूपाणि पुँल्लिङ्गे बालकवत् भवन्ति।

सेवमाना बालिका सेवमाने बालिके सेवमाना: बालिका:

एतस्य रूपं स्त्रीलिङ्गे लतावत् चलति।

लभमानं धनम् लभमाने धने लभमानानि धनानि

सेवमानं मित्रम् सेवमाने मित्रे सेवमानानि धनानि

नपुंसकलिङ्गे एतस्य रूपं फलवत् भवति।

## अभ्यास:

1. **शतृप्रत्ययं योजयित्वा वाक्यपूर्तिं कुरूत—**
   (i) .................................... धावका: यश: प्राप्नुवन्ति। (धाव्+शतृ)
   (ii) वस्त्राणि .................................... रजक: श्रान्त: भवति। (नी+शतृ)
   (iii) जलं .................................... तृषार्तौ सन्तुष्टौ स्त:। (पिब्+शतृ)
   (iv) कथां .................................... महिला शिशुं शाययति। (श्रु+शतृ)
   (v) कार्यं .................................... स्त्रिय: गीतं गायन्ति। (कृ+शतृ)

2. **शानच्प्रत्ययं योजयित्वा वाक्यपूर्तिं कुरूत—**
   (i) गुरुं सेव्+शानच् .................... छात्रा: सफलतां लभन्ते।
   (ii) कष्टं सह्+शानच् .................... जना: दु:खिन: भवन्ति।
   (iii) सत्यं ब्रू+शानच् .................... नरा: सम्मानं प्राप्नुवन्ति।
   (iv) तस्य वृध्+शानच् .................... प्रगति: पितरं हृष्यति।
   (v) मुद्+शानच् .................... बालिका नृत्यति।

3. **अधोलिखितवाक्येषु रेखाङ्कितपदस्य शुद्धमुत्तरं प्रदत्तेभ्य: विकल्पेभ्य: चित्वा लिखत—**

   (क) कथां श्रु+शतृ महिला: ज्ञानं लभन्ते।

   शृण्वन् शृण्वन्ती शृण्वन्त्य:

   (ख) गम्+शतृ बालिके चिन्तयत:।

   गच्छन्ती गच्छन्त्यौ गच्छन्तौ





(ग) वद्+शतृ बालकम् आकारय।

वदन् वदन्तौ वदन्तम्

(घ) धाव्+शतृ क्रीडकेन पथिक: आहत:।

धावन् धावन्तम् धावता

(ङ) श्रान्त: भू+शतृ अरुण: स्वपिति।

भवन् भवन्तौ भवन्त:।

**तव्यत्-प्रत्यय:**

**अधोलिखितानि वाक्यानि पठत —**

| | **विधिलिङ्लकार:** | **'तव्यत्'** प्रत्यय: |
|---|---|---|
| (i) | अमित: पाठं स्मरेत्। | अमितेन पाठ: स्मर्तव्य:। |
| (ii) | रमा लेखान् लिखेत्। | रमया लेखा: लेखितव्या:। |
| (iii) | वयं वृक्षान् आरोपयेम। | अस्माभि: वृक्षा: आरोपयितव्या:। |
| (iv) | वयं प्रतिदिनं दुग्धं पिबेम। | अस्माभि: प्रतिदिनं दुग्धं पातव्यम्। |
| (v) | यूयं फलानि खादेत। | युष्माभि: फलानि खादितव्यानि। |
| (vi) | छात्रा: प्रश्नान् पृच्छेयु:। | छात्रै: प्रश्ना: प्रष्टव्या:। |
| (vii) | यूयं कार्यं कुर्यात्। | युष्माभि: कार्यं कर्त्तव्यम्। |
| (viii) | स: धर्मं पालयेत्। | तेन धर्म: पालयितव्य:। |
| (ix) | सर्वे कथां शृणुयु:। | सर्वै: कथा श्रोतव्या। |
| (x) | स: उच्चै: हसति। | तेन उच्चै: हासितव्यम्। |

अत्र भवन्त: किं पश्यन्ति?

एतानि सर्वाणि वाक्यानि 'तव्यत्' प्रत्यययुक्तानि सन्ति।

विशेष:—

- तव्यत्-प्रत्ययस्य प्रयोग: 'विधिलिङ्लकारस्य' अर्थे भवति।
- अस्य अर्थ: भवति सम्भावना, अनुमति: इत्यादय:।
- तव्यत्-प्रत्ययस्य 'त्' वर्णस्य लोप: भवति 'तव्य' धातो: पश्चात् प्रयुज्यते। यथा- पठ्+तव्यत्=पठितव्य
- प्रत्ययस्य पश्चात् अस्य रूपाणि —

| | | | | |
|---|---|---|---|---|
| पुल्लिङ्गे | – बालवत् | पठितव्य: | पठितव्यौ | पठितव्या: |
| स्त्रीलिङ्गे | – लतावत् | पठितव्या | पठितव्ये | पठितव्या: |
| नपुंसकलिङ्गे | – फलवत् | पठितव्यम् | पठितव्ये | पठितव्यानि |

• 'तव्यत्' प्रत्ययस्य प्रयोग: कर्मवाच्ये भवति—






## अभ्यास:

**1. रिक्तस्थानानि पूरयत—**

(i) रामेण पाठ: ..............................। (लिख्+तव्यत्)

(ii) लतया पुष्पाणि न ..............................। (त्रुट्+तव्यत्)

(iii) त्वया जलं वृथा न..............................। (कृ+तव्यत्)

(iv) त्वया उच्चै: न..............................। (वद्+तव्यत्)

(v) अस्माभि: बहि:..............................। (भ्रम्+तव्यत्)

(vi) सर्वै: सत्यं..............................। (वद्+तव्यत्)

(vii) युष्माभि: सन्तुलितभोजनम् एव..............................। (खाद्+तव्यत्)

(viii) अमितेन अवश्यमेव तत्र..............................। (गम्+तव्यत्)

(ix) नकुलेन पाठा:..............................। (पठ्+तव्यत्)

(x) तै: धर्म:..............................। (पाल्+तव्यत्)

**2. कोष्ठकप्रदत्तशब्दै: सह उचितां विभक्तिं प्रयुज्य रिक्तस्थानानि पूरयत—**

(i) .................... एतत् कार्यं कर्त्तव्यम्। (अस्मद्)

(ii) .................... खगा: रक्षणीया:। (युष्मद्)

(iii) .................... पाठा: पठितव्या:। (नमित)

(iv) .................... अनुशासनं पालयितव्यम्। (सर्व)





(v) .................... देशरक्षा कर्त्तव्या। (सैनिक)

(vi) .................... मधुरं वक्तव्यम्। (जन)

(vii) .................... परिश्रम: कर्त्तव्य:। (श्रमिक)

(viii) .................... नियमा: पालयितव्या:। (अध्यापक)

(ix) .................... मनसा पाठयितव्यम्। (शिक्षक)

(x) .................... लेखौ लिखितव्यौ। (तत्)

**3. कोष्ठकप्रदत्तशब्दै: सह उचितां विभक्तिं प्रयुज्य रिक्तस्थानानि पूरयत—**

(i) न्यायाधीशेन .................... कर्त्तव्य:। (न्याय)

(ii) त्वया .................... खादितव्यम्। (पौष्टिकभोजन)

(iii) सर्वै: प्रात: .................... कर्त्तव्यम्। (भ्रमण)

(iv) तेन .................... पठितव्या:। (कथा)

(v) अस्माभि: .................... स्मर्तव्या:। (पाठ)

(vi) युष्माभि: .................... एव सेवितव्यानि। (सुचरित)

(vii) जनै: .................... एव कर्त्तव्यानि। (सुकार्य)

(viii) छात्रै: .................... प्रष्टव्या:। (प्रश्न)

(ix) बालै: .................... न दूषयितव्यम्। (जल)

(x) युष्माभि: .................... न त्रोटयितव्यानि। (पुष्प)

## अनीयर्-प्रत्यय:

**1. अधोलिखितानि वाक्यानि पठत—**

(i) बालै: वृद्धा: सदैव पूजनीया:।

(ii) छात्रै: अध्यापका: सम्माननीया:।

(iii) अस्माभि: पितरौ पूजनीयौ।

(iv) युष्माभि: गुरूणां आज्ञा पालनीया।

(v) सर्वै: जलं रक्षणीयम्।

(vi) जनै: धरा रक्षणीया।

(vii) सर्वै: वृक्षा: आरोपणीया:।

(viii) अस्माभि: पुष्पाणि न त्रोटनीयानि।

(ix) सर्वै: अनुशासनं पालनीयम्।

(x) सुमितेन सुचरितानि सेवितव्यानि।

उपरि यानि रेखाङ्कितानि पदानि सन्ति तानि 'अनीयर्' प्रत्यययुक्तानि सन्ति।

- 'अनीयर्' प्रत्ययस्य प्रयोग: योग्यार्थे भवति।
- 'अनीयर्' प्रत्ययस्य 'र्' वर्णस्य लोप: भवति, केवलम् 'अनीय' धातो: पश्चात् प्रयुज्यते। यथा- पठ्+अनीयर् = पठनीय।
- धातो: पश्चात् यदा 'अनीयर्' प्रत्ययस्य प्रयोग: भवति तदा अस्य रूपाणि —

| | | | | | | |
|---|---|---|---|---|---|---|
| पुल्लिङ्गे | — | बालवत् | = | पठनीय: | पठनीयौ | पठनीया: |
| स्त्रीलिङ्गे | — | लतावत् | = | पठनीया | पठनीये | पठनीया: |
| नपुंसकलिङ्गे | — | फलवत् | = | पठनीयम् | पठनीये | पठनीयानि |

'अनीयर्' प्रत्ययस्य प्रयोग: कर्मवाच्ये भवति।




**1. अधोलिखितानि वाक्यानि पठित्वा 'अनीयर्' प्रत्यययुक्तपदानि चित्वा समक्षं लिखत —**

**पदानि**

(i) अस्माभि: धर्म: आचरणीय:। ..................

(ii) जनै: परिश्रम: करणीय:। ..................

(iii) सर्वै: पर्यावरणस्य रक्षा करणीया। ..................

(iv) बालै: नियमा: पालनीया:। ..................

(v) त्वया एष: पाठ: पठनीय:। ..................

(vi) सर्वै: समयस्य अनुपालनं कर्त्तव्यम्। ..................

(vii) त्वया कदापि वृथा न वदनीयम्। ..................

(viii) अनेन एतत् न करणीयम्। ..................

(ix) अस्माभि: दूषितं जलं न पानीयम्। ..................

(x) युष्माभि: पर्युषितम् अन्नं न खादनीयम्। ..................



प्रत्यया:

**2. अधोलिखितेषु वाक्येषु 'अनीयर्' प्रत्यययुक्तानि पदानि इति (✓) चिह्नेन चिह्नितं कुरुत—**

(i) मनसा सततं स्मरणीयम्
(ii) वचसा सततं वदनीयम्
(iii) लोकहितं मम करणीयम्
(iv) न भोगभवने रमणीयम्
(v) न सुखशयने शयनीयम्
(vi) अहर्निशं जागरणीयम्
(vii) लोकहितं मम करणीयम्
(viii) न जातु दु:खं गणनीयम्
(ix) न च निजसौख्यं मननीयम्
(x) कार्यक्षेत्रे त्वरणीयम्
(xi) लोकहितं मम करणीयम्
(xii) दु:खसागरे तरणीयम्
(xiii) कष्टपर्वते चरणीयम्
(xiv) विपत्तिविपिने भ्रमणीयम्
(xv) लोकहितं मम करणीयम्
(xvi) सदा मया सञ्चरणीयम्
(xvii) लोकहितं मम करणीयम्

**3. कोष्ठकप्रदत्तपदै: सह उचितां विभक्तिं प्रयुज्य रिक्तस्थानानि पूरयत—**

(i) युष्माभि: प्रात: उत्थाय ............। (पठ्+अनीयर्)
(ii) जनै: सर्वदा सर्वेषां कल्याणं ............। (कृ+अनीयर्)
(iii) अस्माभि: सुकार्याणि............। (कृ+अनीयर्)
(iv) सर्वै: ईशवन्दना............। (स्मृ+अनीयर्)
(v) त्वया मधुराणि वचनानि............। (वद्+अनीयर्)
(vi) सैनिकै: दु:खं न............। (गण्+अनीयर्)
(vii) अस्माभि: धर्म:............। (आ+चर्+अनीयर्)
(viii) त्वया वृथा न............। (वच्+अनीयर्)
(ix) जनै: प्रात:............। (जागृ+अनीयर्)

4. **उदाहरणानुसारं लिखत —**

| | पुल्लिङ्गे | | | स्त्रीलिङ्गे | | | नपुंसकलिङ्गे | | |
|---|---|---|---|---|---|---|---|---|---|
| शब्द: | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
| हसनीय- | हसनीय: | हसनीयौ | हसनीया: | हसनीया | हसनीये | हसनीया: | हसनीयम् | हसनीये | हसनीयानि |
| पठनीय- | .................. | .................. | .................. | .................. | .................. | .................. | .................. | .................. | .................. |
| पानीय- | .................. | .................. | .................. | .................. | .................. | .................. | .................. | .................. | .................. |
| ग्रहणीय- | .................. | .................. | .................. | .................. | .................. | .................. | .................. | .................. | .................. |

### तद्धित-प्रत्यया:

**शिक्षक: — अधोलिखितवाक्यानि ध्यानेन पठत —**

(i) बुद्धिमान् सदैव सफल: भवति।

(ii) कीर्तिमान् सर्वत्र यश: प्राप्नोति।

(iii) धनवान् निर्धनस्य साहाय्यं करोति।

(iv) शक्तिमान् जन: भारं वोढुं समर्थ: भवति।

(v) बलवान् जन: निर्बलं न उपहरेत्।

एतेषु वाक्येषु कर्तृपदेषु वयं बुद्धिकीर्तिधनशक्तिबलम् इत्यादिषु किं योजितवन्त: येन अर्थ: बुद्ध्या युक्त:, कीर्त्या युक्त:, शक्त्या युक्त:, बलयुक्त: च भवति।

छात्र: — महोदय! बुद्धिकीर्तिशक्तय: इत्यादिशब्देषु 'मान्' इति योजित: धन-बलशब्दाभ्यां वान् इति योजित:।

शिक्षक: — सुष्ठु! सम्यगभिज्ञातम्

1. मान् वान् एव मतुप्, वतुप् प्रत्यययो: प्रयोग: युक्तताया: अर्थे भवति।
2. मतुप् प्रत्ययस्य मत्, वतुप् प्रत्ययस्य च वत् शब्देषु संयोज्यते पुन: हलन्तशब्दानुसारं रूपनिर्माणं भवति।
3. अकारान्तशब्देषु वतुप् प्रत्यय: अ-भिन्नस्वरान्तशब्देषु च मतुप्-प्रत्ययस्य प्रयोग: भवति।
4. स्त्रीलिङ्गे बुद्धिमती, धनवती इत्यादिप्रकारेण नदीशब्दवत् रूपनिर्माणं भवति। अधुना अनयो: प्रयोगस्य अभ्यासं कुर्म: ।

यथा —

**धनवत् (पुल्लिङ्गे)**

| **विभक्ति:** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| प्रथमा | धनवान् | धनवन्तौ | धनवन्त: |
| द्वितीया | धनवन्तम् | धनवन्तौ | धनवत: |
| तृतीया | धनवता | धनवद्भ्याम् | धनवद्भि: |





| | | | |
|---|---|---|---|
| चतुर्थी | धनवते | धनवद्भ्याम् | धनवद्भ्य: |
| पञ्चमी | धनवत: | धनवद्भ्याम् | धनवद्भ्य: |
| षष्ठी | धनवत: | धनवतो: | धनवताम् |
| सप्तमी | धनवति | धनवतो: | धनवत्सु |
| सम्बोधनम् | हे धनवन्! | हे धनवन्तौ! | हे धनवन्त:! |

**धनवती (स्त्रीलिङ्गे)**

| विभक्ति: | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | धनवती | धनवत्यौ | धनवत्य: |
| द्वितीया | धनवतीम् | धनवत्यौ | धनवती: |
| तृतीया | धनवत्या | धनवतीभ्याम् | धनवतीभि: |
| चतुर्थी | धनवत्यै | धनवतीभ्याम् | धनवतीभ्य: |
| पञ्चमी | धनवत्या: | धनवतीभ्याम् | धनवतीभ्य: |
| षष्ठी | धनवत्या: | धनवत्यो: | धनवतीनाम् |
| सप्तमी | धनवत्याम् | धनवत्यो: | धनवतीषु |
| सम्बोधनम् | हे धनवति! | हे धनवत्यौ! | हे धनवत्य:! |

**धनवत् (नपुसंकलिङ्गे)**

| विभक्ति: | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | धनवत् | धनवती | धनवन्ति |
| द्वितीया | धनवत् | धनवती | धनवन्ति |

- अन्यासु विभक्तिषु पुल्लिङ्गवद् रूपाणि भवन्ति।

इन् प्रत्यययुक्तपदानां रूपाण्यपि हलन्तशब्दवद् भवन्ति। तेभ्य: स्त्रीलिङ्गावबोधाय स्त्रीप्रत्ययस्य प्रयोगं कृत्वा स्त्रीलिङ्गपदनिर्माणम् अपि भवति यथा—

**गुणिन् (पुल्लिङ्गे)**

| विभक्ति: | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | गुणी | गुणिनौ | गुणिन: |
| द्वितीया | गुणिनम् | गुणिनौ | गुणिन: |
| तृतीया | गुणिना | गुणिभ्याम् | गुणिभि: |
| चतुर्थी | गुणिने | गुणिभ्याम् | गुणिभ्य: |
| पञ्चमी | गुणिन: | गुणिभ्याम् | गुणिभ्य: |
| षष्ठी | गुणिन: | गुणिनो: | गुणीनाम् |
| सप्तमी | गुणिनि | गुणिनो: | गुणिषु |
| सम्बोधनम् | हे गुणि! | हे गुणिनौ! | हे गुणिन: |

गुणिनी (स्त्रीलिङ्गे)

| विभक्ति: | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | गुणिनी | गुणिन्यौ | गुणिन्य: |
| द्वितीया | गुणिनीम् | गुणिन्यौ | गुणिनी: |
| तृतीया | गुणिन्या | गुणिनीभ्याम् | गुणिनीभि: |
| चतुर्थी | गुणिन्यै | गुणिनीभ्याम् | गुणिनीभ्य: |
| पञ्चमी | गुणिन्या: | गुणिनीभ्याम् | गुणिनीभ्य: |
| षष्ठी | गुणिन्या: | गुणिन्यो: | गुणिनीनाम् |
| सप्तमी | गुणिन्याम् | गुणिन्यो: | गुणिनीषु |
| सम्बोधनम् | हे गुणिनि! | हे गुणिन्यौ! | हे गुणिन्य:! |

### अभ्यास:

**1. अधोलिखितवाक्येषु समुचितपदेन रिक्तस्थानपूर्तिं कुरुत—**

(i) (बल + इन्) ................................ जना: निर्बलेषु बलप्रयोगं न कुर्यु:।
(ii) रथिनम् (..................+..................) जनम् वार्तायां मग्नं न कर्तव्यम्।
(iii) शिल्पिन्य:(..................+..................) बालिका: कुत्र गता:?
(iv) दण्डिनि (..................+..................) जने न विश्वसिहि।
(v) (कर+इन्) ................................ वने वसति।
(vi) धनिन:(..................+..................) गर्विता: न भवेयु:।
(vii) सीता अवदत् - अहम् ................................(कुशल+इन्) अस्मि।
(viii) बलिनौ (..................+..................) अपमानं न सहेते।
(ix) (..................+..................) गुणिना जनेन एतत् कार्यं सुष्ठु कृतम्।
(x) दण्डिन:(..................+..................) दण्डं धारयन्ति।

**2. प्रदत्तशब्देषु मतुप् अथवा वतुप् प्रत्ययस्य यथापेक्षितं रूपं संयुज्य/वियुज्य लिखत—**

(i) बुद्धिमती (..................+..................) नारी प्रशस्यते।
(ii) एतौ छात्रौ (शक्ति+मतुप्) ................................ स्त:।
(iii) ता: कन्या: गुणवत्य: (..................+..................) सन्ति।
(iv) लक्ष्मीवान् (..................+..................) लक्ष्म्या: आदरं कुर्यात्।
(v) ................................(धन+वतुप्) जना: दरिद्राणां सहायतां कुर्वन्तु।





(vi) सत्यवत्यै (..................+..................) नार्यै पुस्तकं यच्छ।

(vii) (सत्य+वतुप्)...................................... जनै: सदा सत्यभाषणं क्रियते।

(viii) बलवता (..................+..................) जनेन निर्बलेषु बलं न प्रयोक्तव्यम्।

(ix) (शक्ति+मतुप्)...................................... नार्या इदं कार्यं कृतम्

(x) गुणवद्भि: (..................+..................) छात्रै: ध्यानेन पठ्यते।

## इन् (णिनि) प्रत्यय:

अकारान्तशब्दै: सह 'युक्त' इत्यर्थे णिनि (इन्) प्रत्ययस्य प्रयोग: अपि भवति यथा—

गुण + णिनि (इन्)–गुणिन् – गुणै: युक्त:
दण्ड + इन् –दण्डिन् – दण्डेन युक्त:
शिल्प + इन् –शिल्पिन् – शिल्पकलया युक्त:
कर + इन् –करिन् (गज:) –करेण (शुण्डेन) युक्त:
बल + इन् –बलिन् – बलेन युक्त:

एतेषां प्रयोग: अपि वाक्येषु शब्दरूपनिर्माणाय क्रियते।

## त्व-तल्-प्रत्ययौ

शिक्षक: — एतं श्लोकं पठत—

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन।
स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते॥

अत्र 'विद्वत्त्वम्, नृपत्वम्' इति पदयो: कस्य प्रत्ययस्य प्रयोग:?

छात्रा: — गुरुवर! न जानीम: वयम्। कृपया बोधयतु।

शिक्षक: — अत्र भाववाचकस्य 'त्व' इति प्रत्ययस्य प्रयोग:।

[ विद्वस्+त्व=विद्वत्त्वम्
नृप+त्व=नृपत्वम् ]

**'त्व'** प्रत्ययस्य प्रयोग: इत्येवं क्रियते

अस्य प्रत्ययस्य प्रयोगेण शब्द: नपुंसकलिङ्गे: भवति। अत: शब्दरूपं 'फलम्' इति शब्दवत् निर्मीयते।

उमेश: — यथा दीर्घत्वम्।

शिक्षक: — आम् शोभनम्। एवमेव अन्यशब्दानपि निर्माय वदन्तु।

महेश: — लघुत्वम्, महत्त्वम्

शिक्षक: — अतिशोभनम्। अधुना एतां पङ्क्तिं पठत-

का जडता? पाठतोऽप्यनभ्यास:।

अर्थात् यदि पठितस्य अभ्यास: न क्रियते तर्हि जडता आयाति। अत्र भाववाच्ये एव तल् प्रत्यय: प्रयुक्त:।

रहीम: — किं त्व, तल् च द्वावेव भाववाचकौ प्रत्ययौ?

शिक्षक: — आम् सम्यगवगतम्।

रमेश: — तर्हि किमन्तरं द्वयो: मध्ये?

शिक्षक: — अन्तरं केवलं लिङ्गप्रयोगस्य एव।

छात्रा: — कथमिव?

शिक्षक: — तल् प्रत्ययस्य प्रयोगेण शब्द: स्त्रीलिङ्ग: भवति। यथा जडता, दीर्घता, लघुता, महत्ता इत्यादिप्रकारेण तल् प्रत्यययुतस्य शब्दस्य रूपाणि 'बालिका' शब्दवत् भवन्ति।

इदानीमस्या: तालिकाया: माध्यमेन अवगच्छाम:-

| | | | |
|---|---|---|---|
| लघु | — | लघुता | लघुत्वम् |
| महत् | — | .................. | .................. |
| दीर्घ | — | .................. | .................. |
| गुरु | — | .................. | .................. |
| पवित्र | — | .................. | .................. |

छात्रा: — तालिकां पूरयन्ति।

शिक्षक: — अधुना वाक्येषु एतयो: अभ्यासं कुर्म: ।

**अध: प्रदत्तवाक्येषु त्व/तल्-प्रत्ययस्य संयोजनं/वियोजनं वा कृत्वा रिक्तस्थानानि पूरयत —**

(i) कृष्णसुदाम्नो: मित्रता (.............................+.............................. ) विश्वप्रसिद्धा।

(ii) विद्वत्वम् (.............................+..............................) च नृपत्वम् (..............................+..............................) च नैव तुल्यम्।

(iii) कार्येषु दीर्घसूत्रता (.............................+..............................) कदापि न कर्तव्या।

(iv) आकारस्य (लघु+त्व) .............................................. कार्यबाधक: न भवेत्।

(v) पशव: स्वपशुत्वम् (.............................+..............................) तु दर्शयन्ति एव।





(vi) वेदानां (महत्+त्व) .................................. को न जानाति।

(vii) गङ्गाया: पवित्रता (......................+......................) जगत्प्रसिद्धा।

(viii) मूर्ख: स्वमूर्खतां (......................+......................) सभायां न प्रदर्शयेत्।

(ix) नदीनां (दीर्घ+तल्) .................................. चिन्तनात् पर: विषय:।

(x) मित्रेण सह मित्रत्वम् (......................+......................) कदापि न त्याज्यम्।

**ठक्- प्रत्यय:**

**अधोलिखितानि वाक्यानि पठत—**

- स एक: श्रेष्ठ: नागरिक: अस्ति।
- एतद् आध्यात्मिकं कार्यम् अस्ति।
- एष: धार्मिक: ग्रन्थोऽस्ति।
- अद्य विद्यालये सांस्कृतिक: कार्यक्रमोऽस्ति।
- देशस्य सेवा अस्माकं नैतिकं कर्त्तव्यम् अस्ति।
- एतत् अस्माकं दैनिकं कार्यम् अस्ति।
- अद्य अस्माकं वार्षिकी परीक्षा अस्ति।
- एष: कार्मिक: परिश्रमी अस्ति।
- एषा मासिकी पत्रिका अस्ति।
- दिल्लीप्रदेशे अनेकानि ऐतिहासिकानि स्थानानि सन्ति।

उपरि यानि रेखाङ्कितानि पदानि सन्ति तानि सर्वाणि 'ठक्' प्रत्यय-युक्तानि सन्ति।

- 'ठक्' प्रत्यय: भावार्थे प्रयुज्यते।
- 'ठक्' प्रत्यय: 'इक' रूपेण परिवर्तित: भवति।
- 'ठक्' प्रत्यये आदिस्वरे वृद्धि: भवति।

यथा— धर्म+ठक्=धार्मिक

- 'ठक्' प्रत्ययस्य रूपाणि त्रिषु लिङ्गेषु भवन्ति।

यथा—

| | | | | |
|---|---|---|---|---|
| पुल्लिङ्गे – | बालकवत् – | नैतिक: | नैतिकौ | नैतिका: |
| स्त्रीलिङ्गे – | नदीवत् – | नैतिकी | नैतिक्यौ | नैतिक्य: |
| नपुंसकलिङ्गे – | फलवत् – | नैतिकम् | नैतिके | नैतिकानि |

'ठक्' प्रत्ययस्य प्रयोग: विशेषणरुपेण भवति।

## अभ्यास:

1. **अधोलिखितेषु कोष्ठकप्रदत्तशब्दै: सह 'ठक्' प्रत्ययस्य प्रयोगं कृत्वा रिक्तस्थानानि पूरयत —**
   - (i) .................................. (धर्म+ठक्) जना: धर्मम् एव आचरन्ति।
   - (ii) अद्य .................................. (वर्ष+ठक्) परीक्षापरिणाम: प्राप्स्यते।
   - (iii) अद्य वयं .................................. (इतिहास+ठक्) स्थलानि द्रष्टुं गच्छाम:।
   - (iv) .................................. (प्रथम+ठक्) शिक्षा बाल्यत: एव भवति।
   - (v) .................................. (सेना+ठक्) देशं रक्षन्ति।
   - (vi) अधुना .................................. (अध्यात्म+ठक्) शिक्षा अनिवार्या।
   - (vii) .................................. (नगर+ठक्) एव देशम् उन्नयन्ति।
   - (viii) एता: .................................. (विज्ञान+ठक्) चिन्तायां मग्ना: सन्ति।

2. **'ठक्' प्रत्यययुक्तपदानि चित्वा लिखत —**
   - (i) भौतिकी उन्नतिरपि अनिवार्या।
   - (ii) अधुना वार्षिकं कार्यं सम्पन्नम्।
   - (iii) सैनिका: देशम् उन्नयन्ति।
   - (iv) दैविकी विपदा कष्टकरी भवति।
   - (v) एष: सार्वभौमिक: सिद्धान्तोऽस्ति।
   - (vi) सार्वकालिका: उपदेशा: एते।
   - (vii) सामाजिकं कार्यम् एव एतत्।
   - (viii) वैज्ञानिका: अन्वेषणे रता: भवन्ति।
   - (ix) भारतस्य भौगोलिकी स्थिति: सुन्दरा अस्ति।
   - (x) एषा कवे: मौलिकी कृति:।

## स्त्री-प्रत्यया:

**अधोलिखितवाक्यानि ध्यानेन पठन्तु —**

- इयं एका छात्रा अस्ति।
- विद्योत्तमा विदुषी आसीत्।
- अध्यापिका छात्रान् पाठयति।
- अजा तृणं चरति।
- आचार्या स्नेहेन पाठयति।





- गायिका गीतं गायति।
- सुता गृहस्य भूषणं भवति।
- नदी मलिना न कर्त्तव्या।
- नायिका अभिनयं करोति।

उपरि लिखितानि रेखाङ्कितपदानि स्त्रीलिङ्गे सन्ति। पुल्लिङ्गपदानां स्त्रीलिङ्गे परिवर्तनाय स्त्रीप्रत्यया: प्रयुज्यन्ते। अत्र वयं टाप् ङीप् च प्रत्ययौ पठिष्याम:। टाप् प्रत्यये (आ) शिष्यते, ङीप् च प्रत्यय: (ई/आनी) शिष्यते।

नद + ङीप् - नदी
गोप + ङीप् - गोपी
महिष + ङीप् - महिषी
ब्राह्मण + ङीप् - ब्राह्मणी
वदन् + ङीप् - वदन्ती
श्रीमन् + ङीप् - श्रीमती
दातृ + ङीप् - दात्री
गुणिन् + ङीप् - गुणिनी
तपस्विन् + ङीप् - तपस्विनी

सर्वेषां रूपाणि नदीवत् भवन्ति यथा– गोपी गोप्यौ गोप्य:।

छात्र + टाप् - छात्रा
गायक + टाप् - गायिका
धावक + टाप् - धाविका
शिक्षक + टाप् - शिक्षिका
साधक + टाप् - साधिका
प्रथम + टाप् - प्रथमा
द्वितीय + टाप् - द्वितीया
सरल + टाप् - सरला
अज + टाप् - अजा
मूषक + टाप् - मूषिका
सुत + टाप् - सुता
बालक + टाप् - बालिका

सर्वेषां रूपाणि लतावत् भवन्ति यथा– गायिका गायिके गायिका:

## अभ्यास:

**1. शुद्धं विकल्पं चित्वा रिक्तस्थानानि पूरयत—**

(i) इयं .................... पठति। (छात्र:/छात्रा)

(ii) बालिकासु .................... अध्ययनशीला अस्ति। (प्रथम:/ प्रथमा)

(iii) शोभनानां भोजनानां .................... भव। (दातृ/ दात्री)

(iv) एषा .................... हवनं करोति। (तपस्वी/ तपस्विनी)

(v) गङ्गा एका .................... अस्ति। (नद/ नदी)

**2. कोष्ठकप्रदत्तपदानां समुचितं प्रयोगं कुर्वन्त:/ कुर्वन्त्य: रिक्तस्थानानि पूरयत—**

**मञ्जूषा**

| |
|---|
| श्रीमती, प्राध्यापिका, नदी, तपस्विन्या, नदीम्, प्रथमा, मातुलानी, बालिका:, गच्छन्ती, मेधाविनी, छात्रा: |

(i) इयम् एका ....................अस्ति

(ii) .................... परित: वृक्षा: सन्ति।

(iii) ....................सह तस्य पुत्र: अपि प्रवचनं करोति।

(iv) एता: ....................सन्ति।

(v) ता: सर्वा: .................... सन्ति।

(vi) ....................वाचाला अस्ति।

(vii) ग्रामं .................... श्रमिका श्रान्ता अस्ति।

(viii) एषा बालिका .................... अस्ति।

(ix) मम .................... विदेशं गच्छति।

(x) ....................रमा एका.................... अस्ति।



प्रत्यया:

3. **अधोलिखिते अनुच्छेदे रेखाङ्कितपदानि स्त्रीलिङ्गे परिवर्त्य अनुच्छेदं पुनः लिखत—**

एक: बालक: ग्रामे वसति। स: विद्यालयं गच्छति। तेन सह तस्य भ्राता अपि गच्छति। तस्य शिक्षक: तं प्रेम्णा पाठयति। विद्यालये अनेके छात्रा: सन्ति। तेषु एक: अत्यधिक: मेधावी अस्ति।

........................................................................................................................

........................................................................................................................

........................................................................................................................

........................................................................................................................

........................................................................................................................

........................................................................................................................

........................................................................................................................

........................................................................................................................

........................................................................................................................

........................................................................................................................

........................................................................................................................

